चतुर्वर्गश्रेणीफलयुगपदुद्भावनकराः
करास्ते चत्वारः कलयितुमलं शर्म विमलम् ॥
रसक्रीडामाने प्रणयिनि रुषेवाकुणितयो-
स्ततो नीचीभूतत्रिदशधुनिवीचीविशदयोः ।
प्रसादप्रोद्भूतप्रचुरसुखसौभाग्यपदयोः
स्थिरं स्यान्मच्चित्तं गिरिशमहिषि त्वत्पदयोः ॥
शिवे शय्यावेश्मोपगमसमये भूरिसुरतै-
र्बृहत्सामस्तोमप्रवचनचमत्काररुचिरैः ।
कलक्वाणैः प्राणप्रदमिव गिरीशश्रवणयो-
रिदं ते हंसानां हरति हृदयं हंसकयुगम् ॥"

पाठकमहाभागाः ! किमद्योदाह्रियताम् । अस्य स्तोत्रवरस्य नवोत्तरशतं श्लोकाः सर्वेऽप्यहमहमिकया युगपदुपतिष्ठन्ते । हन्त ! स्थाने स्थाने विशीर्णपत्रमिदं पुस्तकं भूयसापि परिश्रमेण कदाचित्साङ्गं भवेन्न वेति विशङ्केव । नोपनिबद्धं कविकलानिधिमहाशयैः केवलं गीर्वाणगिरायामेव, अपि तु प्राकृतभाषास्विपुष्कलपाण्डित्यमप्यविकलमासीदेषां महोदयानाम् । इत्थंभूतास्विहोद्धृताः काश्चन माधवेन्द्रगाथाः—

"माहवणिवकित्तीओ फुल्लिअविअइल्लमालइवणाइं ।
सअलकइमहुअराणं साणंदविणोअकारणाइं धुवम् ॥
सरसगुणकव्वमज्झे जेत्ताओ सुकइकण्ठअस्मि संठविआ ।
तेत्ताणं उवमाणं तुमं सि माहवणरिन्द दप्पणओ ॥

---

१ माधवनृपकीर्तयः फुल्लविचकिलमालतीवनानि ।
सकलकविमधुकराणां सानन्दविनोदकारणानि ध्रुवम् ॥
सरसगुणकाव्यमध्ये यावत्यः सुकविकण्ठे संस्थिताः ।
तावतीनामुपमानां त्वमसि माधवनरेन्द्र दर्पणः ॥

ओणीदं विजआए माहव तुह किचिमुत्तिअमणग्घम् ।
धरिऊण इक्ककण्णे पइट्ठिआ पव्वई हरद्धङ्गे ॥
सूरो चन्दो इन्दो तुलासु माहवणिवेण संतुलिदो ।
अहि भुइ गुरुओत्ति तुमं लद्धुवा अण्णे दिवं जादा ॥
अरुणग्गमे व्व तिमिरं तुह लोअणकोणसोणिदाभासो ।
माहवणरिन्द जुज्झम्मि एस णासेइ पडिवक्खम् ॥" इत्यादि ।

पाठकमहाभागाः ! विलोकितमेव श्रीमद्भिरयं कलानिधिमहाभागः संस्कृतसाहित्ये कीदृशीं काष्ठामारूढः । उपनिषदां मर्मवेदिताऽमुष्य तासां हिन्दीमयानुवादात्सम्यगवबुध्यते । मीमांसादिशास्त्रेष्वपि पाटवं स्थाने स्थाने प्रसङ्गसहस्राऽवबुध्यते । यथा ह्युक्तं हरिहरभट्टैः 'कुलप्रबन्धे' पूर्वम्—

"मीमांसापरिशीलने पटुमतिः सांख्याब्धिपारंगमो
न्यायानर्गलवाक्प्रपञ्चचतुरो वेदान्तसिद्धान्तधीः ।
काव्यव्याकृतिवृत्तकोपकुशलोऽलङ्कारसर्वस्ववि-
च्छ्रीकृष्णः कविपण्डितो विजयते वाणीविलासालयः ॥"

तदेतद्विकल्पमुद्राति । एवं संस्कृतवाङ्मयाम्बुनिधिमन्थनमन्दरायितस्याप्यस्य व्रजभाषारचनायामसाधारणं पाटवम्, विशेषतश्छेकाङ्कुप्रसूतया सुदूरदेशभाषायामस्यां व्रजभाषायां सर्वतोमुखमधिकारम्, मधुरवर्णमैत्रीनैपुणं चावलोक्य कस्य वा सचेतसो न प्रसीदेद्धृदयम् । एतस्य प्रमाणमलङ्कारकलानिधिप्रभृतयो व्रजभाषाग्रन्थाः, येषां सूची पूर्वं प्रदा। प्रसङ्गेन कानिचित्पद्यानि अलङ्कारकलानिधेरुदाहृतान्येव । परं यावदायं

---

१ आनीतं विजयया माधव तव कीर्तिमौक्तिकमनर्घम् ।
धृत्वा एककर्णे प्रविष्टा पार्वती हरार्धाङ्गे ॥
सूर्यश्चन्द्र इन्द्रस्तुलासु माधवनृपेण संतुलितः ।
अधिभुवि ( अहि भुवि ) गुरुक इति त्वम्, उपचोऽन्ये दिवं याताः ॥
अरुणोद्गम इव तिमिरं तव लोचनकोणशोणिताभासः ।
माधवनरेन्द्र युद्धे एष नाशयति प्रतिपक्षम् ॥

सुदितो भवेत्तावदेतेषां कलानिधिमहाभागानां भाषाकविरत्नकोविदतामवगमयितुं संमुखमुपस्थितानि कानिचित्पद्यानि पुनरुदाह्रियन्ते । मन्ये नानेन पाठकमहाभागानामरुचिरुदयेत् । तत्र राजवर्णनप्रसङ्गो यथा—

"पारथ करन अरु भरथ भगीरथसे
कानन सुनत गुनलैंही छिन छटिगो
द्वारै पाइ धारैं मदमोकल मतंग मद-
वीचिनके कीचनके बीच है रपटिगो ।
रामचन्द्रभूप कर देखत तिहारे हर,
मोती मनिमानिक की लागति ही लटिगो
दिन दिन दानदरियावकी लहरि बहि
दारिदको वंस छितितलसौं उछटिगो ॥ १ ॥
छूटत हवाई दीह दौर की दवाई अंत-
रिच्छ छवि छाई तारकासे परकासे हैं
छूटैं जुहचंपा चंद्रज्योति की सवाई ज्योति
छूटैं हथफूल फूल दीरघ विकासे है ।
जयसिंहभूपवर दीपमालिका के मिस
ख्याल खरे आतिसके भांति भांति भासे हैं
जीति अरिभौननकों आप आज आगें ठाढ़े
मानहुं प्रताप तेज करत तमासे हैं ॥ २ ॥
थप्पन उथप्पन, सपच्छ अरिदप्पनके
छप्पन करोर जादौं कप्पन कलेसजू
चप्पन प्रताप तेज तप्पन के जासु जस
जप्पन औ अप्पन समप्पन हमेसजू ।
होत पकसीस बिसबीस बीस सीस सुर-
ईसके सीस पै द्विज दीननिके पेसजू
जयसिंह दानी तुम्हें होहु सुखदानी द्वार-
काके राजधानी राजै राजा द्वारकेसजू ॥ ३ ॥

आजु दसराहेके उछाह कविलोग तुम्हें
देतहैं असीस सुनिबेकों सावधान होहु
उमरि दराज मारकंडेमुनिमाने होहु
कीरतिप्रताप ससिसूरज समाने होहु ।
पारथ ज्यों वीर जगजाने होहु जयसाह
चित्तके प्रमान नित चित्तके खजाने होहु
बाजते सदाने होहु देश आबादाने होहु
रंगभरे बाने होहु साहिमनमाने होहु ॥ ४ ॥"

ओजोऽनुकूलगुम्फो यथा—

"छप्पय—अति गरज्जि घन गज्जि, तडित जिमि खंभ तडक्किय ।
प्रगटिय वपु विकराल, असुरवर काल कडक्किय ॥
सटकत विकटजटानि, भटकि घनघटा झटक्किय ।
विज्जुछटा लपटात, झटकि गिरितटनि पटक्किय ॥
बहुबड्डु बड्डि चड्डिय नभहि मड्डिय रवि रुड्डिय ससिय ।
मुख रोस सास नरसिंहके, सचलोक ऊरध ग्रसिय ॥ ५ ॥

अमृतध्वनि

"वरलित होत भुजंगवर, परत गंग उत ढुत्त ।
जटाजूट छूटत जबहिं, नृत्तत्तत हर नित्त ॥
नृत्तत्तहर नित्तत्तवहि दुचित्त त्रिभुवन ।
धित्तत्त धुनि तित्तत्तजिहिं न मित्तत्तसु गन ॥
सित्तत्तगुन मित्तत्रिदस पवित्तत्तरलित ।
जित्तत्तपसासे मित्तत्तकहिं चकित्तत्तरलित ॥ ६ ॥
जय जय सुरनर उच्चरत, गनपति करत गरज्ज ।
बज्जत बज्जन विबुध, सज्जत सुभकज्ज ॥
सज्जत सुभकज्ज जग गज्ज गज्जत गन ।
तज्जत अति छज्जगधरि सुरज्जत मन ॥
धज्जिमि सिर उज्जलनि निमज्जन घय ।
भज्जत्तजुवरज्जतभरि बज्जय जय ॥ ७ ॥"

शृङ्गारविषयकवर्णनम्—

“दीपति दिवारीसी दिपति देहदीपतिसौं
   दामिनीसी दमकै न छिन हू दुरति है
राजत अनंग तरुनाई के तरंग रति-
   रंग के उमंग अंग अंग अंकुरति है।
अतरके सौरभसें तर ह्वै रहे हैं अति
   सतर उरोज देखि भूली गति मति है
देखो ‘लाल’ रूप धरैं रूप है कि, रस है कि,
   रंग है कि, रंभा है कि, रमा है कि, रति है ॥ ८ ॥

लहँगा ललित लाल लाहीको लसत, तैसी
   चोपभीनीं चोली कसी कुचनि बनाइसौं
सकलसिंगारनिसों सखिन सिंगारी प्यारी
   पहरि किनारीदार सारी चित्तचाइसौं।
सौंधेके सलिलसने सिलसिले केस लसैं
   छूटे मुखनलिन पै अलिनके भाइसौं
आजुही अन्हाइ आइ आननउजास ओप,
   सादेही सिंगार साज सोहति सुभाइसौं ॥ ९ ॥

कुचतट निपट मिटानो अरगजा, छूट्यो
   अति ही अधरराग अंजन सुभावरी
नैननिके दूर दूर अंजनकी रेख मिटी,
   पातरेसे गातनि पुलक दरसाव री।
दूतिनकी बानि झूठ बोलिबोई जानि होत
   पंशुधितहानि जानिये न आपु चाव री
वा सठसमीप ही पठाई तू न गई तहां,
   बावरी अन्हान कों गईही आजु बावरी ॥ १० ॥

गृहपति गये मैया पसर चरावन कों,
   सासरे ननद, परी सास सो ससुरियां

घूमांभरी सास ननदीके पास वास, कोऊ
 बैठिबेकी आस न खरोंही काम वरजी ।
आली महिं ओसी अति दुखद परोसी
 घर भीतरन जागैं सब भांतिनसों लरजी
दुतही करी ना नहिं कुलहीन पाई लाक
 रावरी रजाई कोऽब हाय जोर अरजी ॥ IV ॥"

एवंविधानि परःसहस्राणि पद्यानि स्वयं निर्माय अलङ्कारकलानिधौ कलानिधिभिरुदाहृतानि । सांभरयुद्धप्रभृतयो ग्रन्थास्तु नाद्याप्युपलब्धाः, अत एव तत्रत्यं विषयमादर्शयितुं नाहं प्रभवामि । परं कवितारत्नपरीक्षका हृदयैव परिज्ञास्यन्ति यत्संस्कृत–प्राकृत–व्रजभाषासु समानं कवयतः कलानिधेः कियती कवित्वशक्तिरासीदिति । अपि एषु त्रिशतवत्सरेषु सहसैवोपलभ्येत तादृशशक्तिशाली कविः ? अस्तु–वंशपरिचयप्रसङ्गे प्रस्तुतमासमिदं श्रीकृष्णभट्टानां जीवनवृत्तं यावदुपलब्धि पाठकानां सेवायामुपस्थापितम् । यद्यपि अनेन विस्तरेण कदाचिदुद्वेजकेपांचन महोदयानामरुचिः, परमारम्भे (जयपुरवैभवाख्यस्य पूर्वखण्डस्यारम्भे) "तुलसी–सूर–बिहारि–कृष्णभट्ट–भारति–मुखाः" इत्युपश्लोकनमेषां विस्तृतं परिचयमपेक्षत इति तथानुष्ठितमित्यलमधिकोपचारेण ।

---

प्रतीयते । गर्जनकारका घनाः ( मेघाः ), तेनातिशीतवृद्धिः । 'सांस' श्वासः । 'न नदीके पास' शीतवशान्नद्याः समीपे वासो न । 'कोऊ' ग्रामीणानामन्धारस्थानम् । 'आली' आर्द्रा 'मही' भूमिः 'ओसी' अवश्याययुक्ता । 'सी' शीतं अतिदुःखदं पवित्रम् । 'न जागैं' गृहान्तर्नावकाशो, वृष्टेः । 'दुतही' द्वित्वयुक्ता 'दुलाई' न कृता । 'कुलही' कञ्चीपिका ( टोपी ) न प्राप्ता, इत्यर्थः । पक्षान्तरे तु–नायिका गृहे संकेतावकाशाभावात् 'रजाई' गमनानुमतिं याचते । तत्र–गुरुलोकास्तर्जनकारकाः । 'सास' श्वश्रूः प्रघूर्णिता । आली सखी 'महिं' अभ्यन्तरे 'ओसी' अवसरापेक्षिणी । प्रतिवेशिनः गृहाभ्यन्तरे जाग्रति । 'दुतही' दूती नास्ति । अहं कुलीनापि नास्मि । अत एव कुलजाया मेऽनवसरदर्शनविप्रदानमेव योग्यमिति गूढोऽर्थः ।

## सुकविः श्रीद्वारकानाथभट्टः

(सरस्वती. वाणी. भारती.)

श्रीकृष्णाख्यकोविदादमुष्मादाविरासीदथ
भूरिभाग्यभासी द्वारकानाथो महामना
यो हि कविश्रेष्ठो वन्दनीयो बुधपुङ्गवानां
ज्येष्ठो जगदीशकवेर्नूनं निजजन्मना ।
गुणगणवैभवेन तातमतिशेते यो हि
कीलयते कोविदानपीह यस्य कल्पना
'भारती'तिनामवहा भारती विभाति यस्य
हंहो देवी भारतीव कविवदनाऽऽसना ॥ १२ ॥

भूरिभाग्येन भासते तच्छीलः । महत् मनो यस्य स महामनाः, यकार-परत्वाद्विसर्गलोपः । जन्मना, जगदीशकवेर्ज्येष्ठः । पूर्वं च कविकुलतिलकः श्रीकृष्णभट्टस्य द्वौ पुत्रौ, द्वारकानाथो जगदीशश्च । तत्र जगदीशकवि-विम्मनलालस्य वृत्तकोऽभूदित्यग्रे स्फुटीभविष्यति । एतेषां संस्कृतकविता-निबद्धानि नाधिकानि पुस्तकान्युपलभ्यन्ते, परं व्रजभाषाकवितं तावतोऽपि माधुर्यमेषां कवितास्वनुभूयते । 'भारती'त्युपनामाङ्किता यस्य भारती (वाणी) वाग्देवीव कविवदननिवासिनी, कविभिरादरणीया इत्यर्थः ॥१२॥

यद्वाणी विभाति वाणीनूपुरानुकारिणीव
भाषामपि तां रसानुसारिणीमयामहे

साहित्यानुबन्धिनो निबन्धान् यैः प्रणीतानहो
चौरचयनीतानद्य हन्त न लभामहे ।
'सरस्वती' 'वाणी' 'भारती' ति नामधेयवहान्
मोदितमहीन्द्रमाधवेशान्महयामहे
सौष्ठवसनाथरम्यरचनाचमत्कृतिकान्
श्रीद्वारकानाथकविपुङ्गवान् कथामहे ॥ १३ ॥

येषां भाषामपि माधुर्यवशात् रसानुकूलाम्, श्रयामहे जानीमहे । सर्वे गलयों ज्ञानार्थाः । यतो हीमे साहित्यातिरिक्ते संगीतशास्त्रेपि परिनिष्ठिता आसन् । अत एवैषां कवितायां वर्णकृतं माधुर्यमधिकमनुभूयते । एभिः संगीतशास्त्रे 'रागचन्द्रिका' नामको ग्रन्थो विरचितः । 'मधुकरकलानिधिं' विहाय *साहित्यसंबन्धिनोऽमीषां ग्रन्था: केपि नोपलभ्यन्ते* । ते किल सुन्दरकालधर्मैणः समये चौरचयेन नीता इति अग्रे स्फुटं भवेत् । कथामहे कवितया उपश्लोकयामहे । कुथ् शब्दे ॥ १३ ॥

दो०–'सुकवि'–'भारती'त्युपपदं ददे सूक्तिसुहितेन ।
जयपुरमण्डलमघवता माधवधरणीपेन ॥ १४ ॥

पितुः श्रीकृष्णभट्टकविकलानिधेः स्वर्गवासोत्तरमेवास्य सरससूक्तिभिः सुहितेन तुष्टेन श्रीमता माधवसिंहदेवेन (प्रथमेन) 'सुकविः' 'भारती'-त्युपपदं प्रादायि ॥ १४ ॥

बुन्दीपतिरपि भृशममुं दीव्यति स विनयेन ।
येन सोयमलमर्चितः पूर्वजनृपतिनयेन ॥ १५ ॥

पूर्वजैर्नृपतिभिर्यथा द्वारकानाथमहाभागस्य पूर्वजाः श्रीकृष्णभट्टादयः सत्कृताः, एवं तत्सामयिकबुन्दीनरपालोपि एनं सुभृशं पूजयति स्म । एतस्य वंशजानां सविधे बुन्दीधराधीशेन प्रहितमेकं राजकीयपत्रं वर्तते, यत्र पृथ्वीसिंहनृपेण स्पष्टं लिखितमस्ति यद्भवन्तो मम पितृस्थानीयाः किमपिकमह-

मावेदयामि । मम जीवनदशापर्यन्तं नास्मिन् भावे परिवर्तनं भवेदत्र परमेश्वरः प्रमाणमिति । तदेतत्पत्रं सौवर्णरेखाभिश्चित्रितमतिप्राचीनमपि सुभगमवलोक्यते । एवं दानबहुमानादिभिः पूर्वजनृपतिपद्धत्या बुन्दीधराधीशेन सोयं पूजितः ॥ १५ ॥

## चरित्रसंग्रहः



जयपुरधरणीन्द्रस्य माधवसिंहदेवस्य सोयमतिप्रीतिभाजनमासीत् । अहर्निशं श्रीमान्माधवेन्द्रः कवीन्द्रमिमं स्वसहचरमेव चक्रे । दानबहुमानादयोपि भूरिशोऽस्य कृताः । ग्रामादिभूसम्पचिरप्यस्मै अवश्यमेव अदायिष्यत, पर श्रीकृष्णभट्टकविकलानिधेर्नाम्ना ग्रामद्वयं माधवेन्द्रस्य समय एव पत्रारूढमभवत् । अत एव राजकर्मचारिभिस्तथाविधिः प्रतिषिद्ध इति श्रूयते । मुक्तककवित्वेषु श्रीमतो माधवेन्द्रस्य यशोवर्णनमस्त्येव, परमेतस्य मनःप्रसत्तये 'मधुकरकलानिधि' नाम शृङ्गाररसग्रन्थो विरचितः । अत्र हि 'मधुकरराज'नाम्ना श्रीमतो माधवेन्द्रस्य व्यपदेशः कृतः । अत्र हि शृङ्गाररसस्य समग्राङ्गानां सविस्तरवर्णनमस्ति, उदाहरणानि च सर्वाणि माधवेन्द्रवर्णनात्मकानि । अस्मिन् किल कविना माधवधरणीन्द्रस्य महिमैव चरमव्यङ्ग्यं स्थापितम् । शब्दार्थौ हि भूयोगुणीकृतौ । ग्रन्थारम्भे प्रोक्तं हि तेन—

"शबद अरथ चीरणवसन, छपित तंदुल गुनगाथ ।
माधव मोऽब सुदामसों कवो द्वारकानाथ ॥"

अहो कीदृशी ध्वनिगर्भा सूक्तिः । कविः कथयति—शब्दार्थाविमौ मद्गतौ जीर्णवसनस्थानीयौ, यतो हि चाविभावनादितः सर्वैः कविभिः प्रयुक्तप्रायौ । अत एव जीर्णवसनान्तरिता भवद्गुणगाथैव सुदामतंदुलोपमा प्रेयमुपहारः । किञ्च तन्दुलप्रादो उरुपस्तुपरिचेष्टितं यत्नं नापेक्षते । एवमेव

भवान् जीर्णवसनमदर्शैव गुणगाथायां दृष्टिं दद्यादित्यात्मनो विनयः सूच्यते। भवांश्च माधवस्तत एव भवद्गुणबाहुल्येपि मदुपस्थापितान् कतिपयतन्दुलानेव गृहीत्वा सोयं सुदामसदृशोपि जनो द्वारकानाथो विहितः।

जयपुरेन्द्रस्य माधवसिंहदेवस्य स्वर्गारोहणोत्तरं श्रीमता पृथ्वीसिंहनरपालेन, सकलगुणिजनशरण्येन प्रतापसिंहभूपेन चापि सोयं सुबहु मानितः। पृथ्वीसिंहमहाराजस्य पठनार्थमनेन कौमुद्या अनुवादरूपा 'शब्दचन्द्रिका' निर्मिता। श्रीमान् प्रतापसिंहदेवोप्येनं कवितामाधुर्यमुग्धः सुबहु सत्करोति स्म। एष द्वेतस्मै कवीन्द्राय 'भारती'त्युपपदमर्पयामास। एतस्य परिचयप्रसङ्गे 'मण्डनकवीन्द्रेण' राघवचरित्रकाव्ये यदुपनिबद्धं तदधस्तादुद्ध्रियते—

"तिनके (श्रीकृष्णभट्टजीके) तिनहीसे भये तनय द्वारकानाथ।
माधवेश महिमाजुके रहे रैन दिन साथ॥
प्रभुकों राजी कर लियो 'सरसुति' 'सुकवि' किताब।
जिनके जगमें जगि रहे सुजस सरदमहताब॥
'पृथ्वीसिंह, परतापको रिय गुनसों भरपूर।
यानी भारति नाम लिय जगमें रह्यो जहूर॥
कविकुल और कवीन्द्र नित, नृपमुख बोले बैन।
पृथ्वीसिंह परतापसों पाये निसिदिन चैन॥"

अद्यावध्युपलब्धा एतस्य ग्रन्था इमे सन्ति—व्रजभाषायाम्–मधुकरकलानिधिः, वाणीवैराग्यम्, श्रीमत्प्रतापसिंहसभासदानां पद्यवर्णनम्, रागचन्द्रिका, शब्दचन्द्रिका, पृथ्वीसिंहमहाराजस्य विवाहोत्सवः (पृथ्वीसिंहमहाराजका ब्यावला), बुन्दीनरेशस्याज्ञया निर्मितोऽलङ्कारग्रन्थः (यस्य पत्रभ्रंशेन नाम न विदितम्)। संस्कृते–गाढयगीतम्–यदि पाठकैरवलोकितमेव जयपुरवैभवाख्यपूर्वखण्डस्य गाडवाथमवर्णनप्रसङ्गे। अन्यान्यानि च वृक्ष–पक्षि–वर्णनात्मकाव्यस्य संस्कृत–पद्यानि प्राप्यन्ते। वाणीवैराग्यं भर्तृहरिकृतस्य वैराग्यशतकस्य व्रजभाषापद्यैरनुवादः, यस्यादर्शः किञ्चिदग्रे दास्यते। एतेषां कृतिरेवङ्करानानां सविधे समग्रा नोपलभ्यते। अत एव नैतेषां ग्रन्थानां विषये किञ्चिदुक्तुं शक्यते। एतेषां कवितामाधुर्यनिदर्शकानि

कानिचित्पद्यानि 'मधुकरकलानिधि'प्रभृतिभ्यो ग्रन्थेभ्यः समुद्धृत्य पाठकावलोकनाय संगृह्यन्ते—

"वरनविचार लघुगुरु लोक लीकनकों
साधि सोधि रसनाके सुबरन पत्रपर
कर चितहीतें चतुराई चाव लेखनि है
सबद अरथ रंग व्यञ्जनि उजास धर।
'सरसुति' राधिका कुंवर व्रजचंदजूके
रूपकी घटानि बरसावैं रसरंगझर
नेहके नगर जग जगर मगर ऐसें
सुघर सुघर वंदौं भारतीके चित्रकर ॥ १ ॥
वानीजू हो जगरानी सही पदपंकज रावरे जे नर ध्यावैं
ते नर उखमयूखपियूखसनी मृदु काव्यकला बरसावैं।
मानभरे गुनज्ञानभरे पहुमीमघवाननकों ते रिझावैं
कीरति चन्द्रिकाचन्द्रसमान सभानमें ते ही कवीन्द्र कहावें ॥ २॥"

राजवर्णनप्रसङ्गे—

"बजत सदाने रणथंभ थिरथाने सुनि
अरि थहराने ह्वै पराने कुल जोसके
केतक अमाने पुनि तेगनसों भाने, ते वे
भरत खजाने आन माने देस देसके।
राजाराव राने अरु खानसुलताने केते
हुकमी मखाने 'सरसुति' इकवेसके
छाने परतापके सुहाने जगजाने आज
जयके निसाने फहराने माधवेसके ॥ ३ ॥
कूरमसवाई माधवेसके हुकुम जोध
जाटनपै झारें झुकि सारनके भवके
कटि कटि परैं बार बेसुमार वैरिनके
जुगिगन विसाल मांसग्रास लेत ललके।

'सरसुति' तहां संगुसाहिवी सराहिवी यों
छाये छिति प्रेतनि करेजे लोहू छलके
चांवडाके आंवनकों मांचडाके खेत मर्हिं
पांवडा विछाये मानों लालमखमलके ॥ ४ ॥
कोटापै कुपित माधवेस असवार होत
स्वच्छ कच्छवाहे वीररस अभिलाखे हैं
धाये धूत धींग, धीर धौंसनि धमक्के धरा
धूरे धूरि सूरसति गगनगवाखे हैं।
उप्परी उठत वैरीसुप्परी कराकन सों
भभकत लोहू, मुंड झुंड काटि नाखे हैं
मानहुं पतंगरंग कालीकाल खेलनको
फागुनमें कंचन कचोरे भरि राखे हैं ॥ ५ ॥"

हयवर्णनावली:—

"कलित कलंगी सिर, ललित लगाम मुख,
मलित जराउजरी जीनन धरे रहैं
छाती छुवें पाइन कराइनके नोरनमें
मोरि ग्रीव नटकी कलानिकों करो करैं।
ऐसे रघुवंसी माधवेसके बिलंद हय
केते राव राने जिन पायरे तरे रहैं
अकरे सरीदनिके जकरे दुवागनसों
पकरे रहैं तौहू पौनसों अरे रहैं ॥ ६ ॥
जोर करि दौरतमें मनहूके आगें होत
जवके समुद अँगवीचिन के बीच है
सरसुति रविके तुरँग जिहिं देखनकों
सनकों रहत दिनमाँझ ठकारीच है।
ऐसो रघुवंसी माधवेसजूको मोती हय
सहज चलत जिहिं पौनहू नगीच है

मेरे जानि देवराजहीको बाजिराज यह
  रपटि पखो है देवतदिनीके कीच है ॥ ७ ॥"

गजवर्णनादर्शः—

"ढाहैं कोट गढनि गनीमनके मत्थधरि
  सुंडनसों राहैं रोकि रहत अरसकीं
धीरैं धीरैं धरत चलत चालनि तऊ
  धसकी धरासों लेत सेससीस ससकीं ।
साहिब राजाधिराज माधवेस कूरमके
  ऐसे इभ जिन्हें सरसुति कह न सकीं
देत दान मद जे मिलिन्दनकों पही हेत
  दन्तन कपट कहीं कन्दलैं सुजसकीं ॥ ८ ॥
सांवनके घनज्यों सुहावन बिलंद कद
  मद बरसावन जे पोसैं जस कंदकों
घुरत निसानसे बनेरे घोरघोस जिन
  घूमत करैं जे केधों सुंदनिके छंदकों ।
सरसुति सिद्धिभरे कुंभजुग कुंभनसों
  दारिद बहाइ करैं आनँद अमंदकों
मेरे जानि ये ही माधवेसके मतंगवर
  ढकन दे राहुसों उबाँर रबिचंदकों ॥ ९ ॥"

शृङ्गारवर्णनादर्शः—

"लहलही ललित लतानिसों गलित ह्वैकें
  तो तनसुगंध अलि डोलैं लोभलालची
कहा रति रंभा कहा कमला अचंभा, बात
  बसी उरबसी हू न सचीकी प्रभा लची ।
सरसुति चहैं दग जैतवार मृगनके
  इन्दीवर तमाम इतमाम ठालची

स्यामसुखसाधे राधे तेरे हैं अगाधे रूप
जाके मुख आगैं लागै चन्द्रमा मसालची ॥ १० ॥

चंपक चिराक चांदनीनके उजास जीति
अंगछविजालनसौं जगमग भौन भौ
बारनसौं जीते मोर, इन्दु जीत्यो आननसौं
भौंहनि कमान, दृगजीत्यो मृगछौंन भौ ।
कुच जीते चक, त्रिवलिनसौं तरंग जीतीं
रोमावलि बरछी, गयंदजीति गौन भौ
रति जीती रूपसौं सरलतासौं सौति जीती
प्यार जीत्यो प्यारो, लाज जीत्यौ मन मौन भौ ॥ ११ ॥

भरिहांई देह दुहू भरिहां उरोज होत
करिहां मनोजयान मालिनि छुलहियाकैं
सुषमासुछंदजोतिजालनको कंद मुख-
चंद्रिका अमंद चैतचंद्रसौं तुलहियाकैं ।
सहजहूं मंदहंसी, नासा लसी, भौंह कसी
उनदे सनेह मेह अँखियां सुलहियाकैं
ज्यौं ज्यौं सरसात अलिसंगम लहात त्यौं त्यौं
मात उलहात अंग जोबन दुलहियाकैं ॥ १२ ॥"

ऋतुवर्णनादयोः—

यथाः—

"उमडि अपार अंबु धारैं धुरवा न ये तो
झंझाको झकोर झुके झरना झरत हैं
सरसुति कहैं चपलानकी चमाचमी न
चमकति कहियो दिव्य औषधि द्विरत हैं ।
टूटि टूटि परत बधूटी व्योममंडल तैं
गिरि गिरि मानिकके सिखर घिरत हैं

आंखवारे शफरों पयोनिधिकी कांखवारे
पांखवारे पव्वै मेघमिस ले फिरत हैं ॥ १३ ॥
काजरसी कारी घटा ऊनिआई भारी
भूलि जैहो व्रजवारी बाट घोर अँधियारीमें
धारपारवारी वहै जमुना करारी, तामें
पार न उतारी काह्न गोकुल निहारी मैं
छोंड़ बनवारी ! ये कदंबवनवारी अरु
तामें पनवारी यास हामधि विचारी मैं
चूनरी हमारी लाल कामरी तिहारी तर
कामरी तिहारी पास छतनाकी झारी मैं ॥ १४ ॥"

हेमन्तः—

"भीतरें भवन झुके परदा रवन द्वार
अगर वगर दीप सिधरी सुहाईमें
फीने पसमीनेके वितान भरे झालरिन
मखमली मिळम गिळम गहराईमें ।
राजें प्रानप्यारे जहां फूलनकी सेजपर
सरसुति बीन ले बजावें सुघराईमें
एकछत्रछाई ऋतुराजकी दुहाईमधि
दुहुंन रजाई पाई एक ही रजाई मैं ॥ १५ ॥"

शीतः—

"दिस औ विदिस मिली चतुर कुहेलियानि
धूंधरि मचाइ चहूं चित अभिलाख्यो है
सरसुति कहें पुलकित रोम रोम तन
अंग अंग कंपन सिथिल वहुभाख्यो है ।
सांसनि कढत धूमधारामिस बार बार
हियतें निकारिकें विरह दूरि नाख्यो है
होइ न कुहेला फागु खेलाकों बसत संग
सिसिर सहेलाने अबीर उडै राख्यो है ॥ १६ ॥"

दानवीरादर्शः—

"सज्जित तुरंग झलिझंपित मतंग, सुख-
पालकी उतंग झुकी झालरी नछत्रसीं
ललित कलंगी सिरपेच मंजु मोती करे
हारतति अच्छरभवलि जयपत्रसीं ।
छाये कवि जाचक जलूस जरीसाज सजि
सरसुति जागी सिरसोभा छबिछत्रसीं
माधवेस कोलों कहैं रावरेके दान, तुम
ताम्रेपत्र दै दै, कीनी दिसी रूपेपत्रसीं ॥ १७ ॥

झूमैं द्वार माते गय, टापटोप ताते हय
ड्यौढ़ी चोपदारनसीं दौलतिकैं दौर हों
सरसुति रंग रंग भूषनबसन सजि
बैठ्यो सुखपाल त्यों जलेब चहुं ओर हों ।
सपनोसो दारिद विलाय गयो छिनही में
देख्यो आज माधवेस नैननकी कोर हों
द्वैकही कवित कहि बाह्मन भुलानो आपु
बूझै घरनीसों प्यारी वहै हों कि और हों ॥ १८ ॥"

वीरवर्णनादर्शः—

"बाडवकलासी दावानलकी झलासी भुज-
गेसअबलासी रिपुप्राननकी प्यासी है
गिजराजदासी शंभुनैनकी छटासी काल-
रातिकी घटासी, सत्रुकुंजरत्रासी है ।
बानीकों विहासी कालीलुलितविहासी, विक-
राल तेज भासी मकैरविकी प्रभासी है
बैरिनकों कासीसी, प्रकासी चंचलासी, कढि
बीरताविलासी भुवपाल असि असी है ॥ १९ ॥

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः।
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्तात्पवित्तव्ययवशपवनानर्तितभ्रूलतानि ॥
कैधौं कंदरनितें बिलाय गये कंद, कैधौं
गिरिनितें झरने झरत अब रहिगे
बानी कहै कैधों तरु सरसफलनि भरे
बकल सिकलधेरैं डारिधेरैं ढहिगे।
दुःखसों सकुचि थोरे धनके खरच, मृदु
पौनमर्यो भृकुटीलतानि जे उलहिगे
विनयविहीन खललोगनि मलीन ऐसे
मुखनकों देखत कुलीन जो उमहिगे ॥
नाभ्यस्ता भुवि वादिदर्पदमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भदन्तदलनैर्नाकं न नीतं यशः।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥
वादीके बिजैकी कोऊ विद्या नहि साधी, पुनि
छायको न पाई जगजाहिर अमापसों
बानी कहै करिनके कुंभमुकताहलनि
सुजसकैं लूम न लगाई खगाचापसों।
कामिनीके कोमल अधरपल्लवहि दावि
पीयो न पियूष ज्यूहू मैनके प्रतापसों
जोवन दशा दै विन काज नाइलाज यहै
सूने भौंन दिया लौं बिलाय गयो आपसों ॥




एतस्माद्बभूव महिपालमणिमान्यतमः
श्रीमद्व्रजपालनामतनयो नयोद्भवान्
वाणीकरकङ्कणनिनादतो विवादकरी
प्रीणयते यस्य पदलहरी परीक्षकान् ।
व्रजनिधिनाम्ना येन चक्रे श्रीप्रतापनृप-
प्रीतिमनुरुध्य गीतिग्रन्थः स्वररीतिमान्
पोषितप्रतापगुणान् यस्याद्यापि गीतिगणान्
गुणिजनगोष्ठी किल गायति गुणोज्ज्वलान् ॥ १६ ॥

एतस्मात्, द्वारकानाथमहोदयात् । महिपालमणिभिर्मान्यतम । नयोद्भवान्, प्रशस्तनययुक्त । 'प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनी'त्यमर । माधुर्येण सरस्वतीकरकङ्कणनिनादस्य प्रतिद्वन्द्विनी यस्य (व्रजपालस्य) पदलहरी, गीतिपदलहरी वाग्गुम्फपरीक्षकान् मोदयति । श्रीप्रतापसिंहदेवस्य प्रीतेरनुरोधेन प्रतापभूपतेराराध्यस्य श्रीगोविन्ददेवस्य गुणवर्णनपर सगीतग्रन्थो येन कृत । यस्मिन् ग्रन्थे सगीतशास्त्रनियमानुसार सर्वेषा रागाणा स्वरक्रमोऽपि पृथक् पृथक् निर्दिष्ट । अस्मिन् ग्रन्थे नृत्यस्य, ताला नाम्, सर्वेषां च रागाणाम्, तेषा ध्यानस्य, तेषा स्वरक्रमस्य (सरिगम), स्वराणां प्रस्तारस्य, सर्वेषा वाद्यानां स्वरूपस्य, मृदङ्गध्वनेरनुकरणानाम् (परण) अन्येषा च सगीतशास्त्रविषयाणा सविस्तर समहोऽस्ति । उत्तरखण्डे च श्रीराधागोविन्दगुणगौरवमयी नानाच्छन्दोबन्धुरा अनेकलयानु-

सारिणी गीतिपदसाहस्री वर्तते । एतद्ग्रन्थनिर्माणे अन्येपि गुणिनो गायकाः कवयश्च व्रजपालमहोदयसहकारिण आसन्निति श्रूयते । पोपिताः प्रतापसिंहस्य गुणाः यैस्तान्, गीतिगणान् । यथा च यैर्गीतिगणैरद्यापि प्रतापसिंहदेवस्य गुणः पुष्यतीति भावः । पोपितौ (व्रजपालस्य) कवित्वप्रतापो गुणश्च यैस्तान् गीतिगणानित्यपि शब्दशक्तिमहिम्ना व्यज्यते । कविताग्गुणैरुज्ज्वलान् तान् गीतिगणान्, गुणिजनानां गोष्ठी अद्यापि गायति । प्रसिद्धाः किल प्रतापसिंहदेवस्य निर्मिता निर्मापिताश्च गीतय इति नैतत्प्रमाणसापेक्षमिति भावः ॥ १६ ॥

दो०–मुनिशिवदृग्वसुभूमिते वर्षे हर्षयुतेन ।
ग्रामबदरवासो ददे श्रीप्रतापभूपेन ॥ १७ ॥

१८३७ तमे विक्रमसंवत्सरे गुणगौरवसन्तुष्टेन प्रतापसिंहदेवेन पुण्यार्थं (उदके) बदरवासग्रामो दत्तः ॥ १७ ॥



## चरित्रसंग्रहः



व्रजपालमहोदयस्य श्रीमत्प्रतापसिंहदेवस्य समये राजप्रासादे सुमहान्समादरोऽभवत् । प्रतिसमयं श्रीजयपुरेन्द्रस्तमात्मनः समक्षमेव रक्षति स्म । यथा यथा च श्रीमतः प्रतापसिंहदेवस्य गीतिप्रकारे मनः प्रसज्यति स्म, तेन तेनैव प्रकारेण सोयं गीतीर्विरचयामास । क्रमेण च सोयं सुमहान्संग्रहोऽभवत् । एतद्विषये कवीन्द्रसप्तदनेन 'रावलचरित्रकाव्ये' यदुक्तं तदविकलमुद्धरामि—

"तिनके (द्वारकानाथजीके) सुत व्रजपाल हुव काव्यकलनके गेह ।
श्रीप्रतापमहाराजसौं राख्यो नित दिन नेह ॥

किय राधागोविन्दके नाम नयो संगीत।
प्रीति पाय महाराजकी थापि सुरनकी रीत॥"

एतन्निर्मिता अन्ये ग्रन्था नोपलभ्यन्ते। केवलं महाभारतस्यानुवाद एवैतत्कृतः साम्प्रतं खण्डश उपलभ्यते।

एतस्य मुक्तककवित्वानि यान्युपलभ्यन्ते तेषु 'व्रजपाल' 'व्रजनिधि' इत्युभयविधा मुद्रा दृश्यते। दुर्भाग्यवशादेतस्यान्यान्यपूर्वव्रजवदस्यापि कृतिः साम्प्रतमेतद्वंश्यानां सविधे अन्वेषणीयप्रायैव संवृत्ता। गीतीनामादर्शसंग्रहस्य मन्ये न भवेदावश्यकता। संगीतविषयकाणि पद्यानि 'प्रतापसागरे' सुप्रसिद्धान्येव। 'व्रजपाल' 'व्रजनिधि' मुद्राप्रमाणभूतानि एकद्वकवित्वान्यधस्तान्निदर्शयामि—

"आई ही खिरक मांझ गायके दुहावनको
आय गयो मेह दूरि रहिगो सहरिया
चमकत बिजु व्रजपाल अकुलात मन
ऐसो न हि दूजो करै छिनको महरिया।
अबही रँगाइ दीन्ही मोंने बहु दाम देके
वाको है फिकर जामें रंग है गहरिया
तुम सम स्याम नहिं कोऊ इँहिँ ओसरमें
खोहीमें बचाय मेरो लीजिये लहरिया॥१॥"

सेयं वाग्विदग्धाया उक्तिः। अत्र यद् व्यङ्ग्यं तद्रसिकमहाभागानां सविधे सुस्पष्टमेव।

अयं हि जयपुरमहेन्द्रस्य श्रीप्रतापसिंहदेवस्य मनोऽभिप्रायानुसारं कवितामारचय्य तस्मै समर्पयामासेति पूर्वमुक्तमेव। एष हि नरेन्द्रो व्रजभाषायामपि सुमनोहराणि साहित्यसर्वस्वभूतानि पद्यानि कवित्वानि च निर्ममौ निर्मापयामास च। तन्मनःप्रसत्तये व्रजराजमहाभागेनापि जयपुरीयनागरिकभाषायां कवित्वानि निर्मितानि। मन्ये, तेषामेकतमत्र नवेत्पाठकानामरोचकमित्यधस्तादुद्ध्रियते—

"पनघट घाट ठाठ ठाठ्यो छै ठचावाइंको
गैले जाती गोरानें ये किसे काम रोको छो
रसका रसीला गरवीला हुया कांइं फिरो
काम पड्यां कोदै कोदै जाय पग ढोको छो ।
थांको तांणो वांणो प्यारा! म्हांसे चिनी छानो नहीं
आया छो अवार जाणै थांने दियो कोको छो
धजनिधि सांवरा सुण्यां छै गुण रावरा म्हे
नंदका हटीला म्हांको गैलो कांइं रोको छो ॥ २ ॥"




सवै०—

यस्त्वनुजो जगदीशकविः किल दत्तकतामगमत्सुकृती
स हि भागवताद्यनुवादमवादयदद्भुतग्रन्थगणं गणिती ।
वत येन प्रतापनरेशप्रतापकृतौ ग्रहिता कवितासुदती
सततं स हि संभ्रियमाणकृती रसवाग् जयताज्जगदीशकृती

यस्तु द्वारकानाथभट्टादनुजः श्रीकृष्णकविकलानिधेस्तनुजः स हि चिमनलालनाम्नो गृहे दत्तकोऽभूत् । गणिती गणितशास्त्रवेदिता । यद्यपि माधवेशात् (प्रथमात्) आरभ्य जगत्सिंहदेवपर्यन्तमस्य कविता प्रवृत्ता, परं प्रधानतया प्रतापसिंहदेवस्य प्रतापसूचिकायां कृतौ (रचनायां) येन कवितासुन्दरी प्रेरिता । सततं संभ्रियमाणा संगृह्यमाणा कृतिर्यस्य । रसवाक् सरसवाणीकः स जगदीशकृती जयतात् ॥ १८ ॥

# चरित्रसंग्रहः



एष हि ज्येष्ठभ्रातु श्रीद्वारकानाथमहोदयादेव चिन्तामणिमिश्र सकलशास्त्राणि कविता चाधिजगाम। प्रत्येकग्रन्थस्य समाप्तिलेखे लिखत्ययं "ज्येष्ठभ्रातृश्रीद्वारकानाथपट्टशिष्य-चिन्तामणिमिश्रोपासक०" इत्यादि। अनेन बहवो ग्रन्था निर्मिता। प्रायो बहूनां पुराणाना कवित्तसवैयाच्छन्दस्वनुवादोऽपि विहित। संस्कृतकाव्यानामप्यस्य भूयसामनुवाद प्राप्यते। श्रूयते यदस्य हस्तेऽनिश लेखनी तिष्ठति स्म। गच्छँ स्तिष्ठञ्जाग्रन्नयं कवितामयभावेषु विचरति स्म। कवितामारचयन् सोय न लेखनीं विश्रमयति स्म। छन्दोवद्धा भारती स्वत प्रावर्तिष्ट। भावान्केवलमय विचारयति स्म। सेय प्रसिद्धि समूलैव। भूयस्तरामस्य ग्रन्था सन्ति, एव सामर्थ्याभावे नैतत्सम्भवेदित्यूह्यते। दुर्बुद्धिहस्तपतिता एतस्यापि ग्रन्था बहवो लोकैरपहायिता, बहवो नष्टा, बहवश्च नामशेषा। पर प्राप्यमाणग्रन्थेषु त इमे सन्ति—

काव्यविनोद (महाराजपृथ्वीसिंहदेवार्थं विरचितो व्रजभाषामयो लक्षणाग्रन्थ, रचनाकाल स १८३१), किशोरसुरसागर (गवदाधीशस्य किशोरसिंहस्य वचनेन निर्मितो नवरसाना लक्षणोदाहरणै स्वनिर्मितपद्यसहित, रसाना समग्रोपाङ्गै समेत) जगतरसरञ्जनम् (श्रीमज्जगत्सिंहदेवार्थं विरचितोऽयमपि नवरसानामङ्गोपाङ्गै समेतः सलक्षणोदाहरण। रचनाकाल १८६२ स) जगतभक्तिविलास (जगत्सिंहदेवार्थं देवरातभावमय सोय व्रजभाषाग्रन्थो निर्मित) भक्तिभरगजा, पदमकरन्द, पदपङ्कज, ब्रह्मवैवर्तपुराणस्य दोहाचतुष्पदाच्छन्दस्वनुवाद, भागवतदशमस्कन्धस्यानुवाद, श्रीवल्लभाचार्यनिर्मितषोडशग्रन्थानामनुवाद, महाभारतस्य वन-

शान्तिपर्वणोऽनुवादः, माघकृतशिशुपालवधस्यानुवादः, भर्तृहरिशतकत्रयस्य कवित्तसवैयाच्छन्दःस्वनुवादः, अमरुशतकस्यानुवादः ( कवित्तसवैयाच्छन्दःसु ) इत्यादि ।

एतस्य कवितायाः केचिदादर्शाः पाठकानां पुरस्तादुपस्थाप्यन्ते—

"नेवर जराऊ हेमहंसक घराऊ आछे,
किंकिनीके नीके नग नग सो सुहात हैं
सोहैं मुंगमाल गुंजमाल वैजयन्तीमाल
पुहुंची रसाल लाल बाजू दरसात हैं ।
पीतपट बांधें बंसीनाद सुर साधें कहीं
कौलों जगदीस जे गुविन्द छवि गात है
सीसपर ऐसें छहरात मोरचंद मानों
आनँदके मंदिरमें धुजा फहरात है ॥ १ ॥"

जयपुरनरेशहर्म्यमालायां श्रावणतृतीयामहोत्सवः—

"एकै भांति भूषन बसन खास लोगनकें
बिना छत्र चौंर पतै भूप को पिछानतो
चलत हवाई के नवत तारे अम्बरतें
रूठि न आवते तौ तारे कौन मानतो ।
तीजको त्यौंहार जयनगर नरेस सोभ
बिन वरदान कवि कैसें कै बखानतो
गोरियांके सीसपै न होतीं गनगोरियां तौ
गोरियांके बीच गनगोरियां को जानतो ॥ २ ॥
उतै भूरि बादर हैं चादर महल इतै
चंचला उतैको इतै कंचनियां छायी हैं
जिपन जमात उतै दीपनकी पाँति इतै
गरज उतैकी इतै नौबतियां आयी हैं ।
उतै सांझफूली इतै रंगरली सभा सोभ
कवि जगदीस भलिभांतियि यों भायी है

उतै इन्द्र, राजे इतै महेन्द्र श्रीप्रतापभूप
  अद्भुत तीजकी जलूस रचि राखी है ॥ ३ ॥"

गजवर्णनादर्शः—

"वज्रसम सीस टक्करनिसों सहजही सों
  ढेर करि डारैं रिपुकोट गढ छनमें
जिनकी गराज सुनि लाजत दिसाके पील
  डीलके उतंग हैं अडिग्ग महारनमें ।
ऐसे गजराज महाराज माधवेस तेरे
  कहै जगदीस ओम राखैं रहैं मनमें
एही हेत आपुस विरोधिनहू एक कीबे
  आंखिनमें तेज राखैं तम राखैं तनमें ॥ ४ ॥
सक्रपुरद्वारनिकों पारैं सीसटक्करनि
  सुंडनि उखारैं बन नंदनके तर हैं
कहै जगदीस गंडमंडित भँवरगन
  झरिबो करत मद आठ हू पहर हैं ।
हलत धरनि अति चलत जबै जे नैक
  गज्ज सुनि दिग्गज करत थरथर हैं
साजैं अंग आभूषन काजैं जंगजीतनके
  राजैं माधवेसजूके ऐसे गजवर हैं ॥५॥"

हयवर्णनादर्शः—

"मधुकरराज राजैं ऐसे दान तुंग तुरी
  मुश्की औ ताजी तेजी अबलख लाखनाम
कलित कनककाठी ललित बनात जीन
  ढलत रकेब मन, ललित कसैं लगाम ।
कहै जगदीस ऊंचे डीलनके पीलन से
  मात करैं धापनसों सातहय तेजधाम

भावुक न लागै कहूं इससे अवीन हूकैं
चौंकतसे रहैं यातैं मान हुं असेस आम ॥ ६ ॥

पौन मन कैसें धौं लगाइये लवे को, जिन
दूरही रहत जब जलनिधि पाज ते
धरैं जरदोजी जीन मीननकें पाइरेन
चब्बस खलीन रविहय छोह छाजते ।
कहैं जगदीस दीहदानके प्रबंधनमें
देत महाराज माधवेस वाजिराज ते
लोक सब लंघनके लायक ह्वो होते, जो पै
करत करत विधिभुज वैं न माजते ॥ ७ ॥"

शृङ्गारवर्णनादर्शः—

"कुंजनिकी गैल मिली छैल नंदनंदनकों
कुंदनसे अंग छिन एक दरसै गई
कवि जगदीस चैतचंदसो दिखाय मुख
तनमें मतन वेदना कों अति कै गई ।
मंद मंद मदके गयंद जैसी चाल चलि
करिकें निहाल नेह बीजनकों वै गई
मृदु मुसक्याइ रसबातनि सुनाइ नारि
तिरछी निहारि वरछीसी उर दे गई ॥ ८ ॥

चहूं ओर छाये छिति छोरन लौं ओर घन
पवन झकोर घोर गाजति घमकि घमकि
कवि जगदीस कहैं मोरनके सोर मांचे
चख चकचौंधी देत चपला चमकि चमकि ।
ऐसे समै राधेके महल तैं घनस्याम
ठाढे सुख देत रूपरंगनि रमकि रमकि

झांकति झरोखें प्यारी झुकि झुकि रुकि रुकि
 झमकि झबीनि देह दुतिसों दमकि दमकि ॥ ९ ॥

सारद सुधाकरकी फैली चहू चांदनी है
 पास कै चकोरनि चकोरी सुधा चाखें सी
ऐसे समै चारु दासी संग लियें सारदा सी
 बनिकें चली है प्यारी अंग अभिलाखें सी।
कहि जगदीस आइ ऊपरके खंड देखि
 सुमनकी सेज सूनी सब सुख नाखें सी
जोइ रही जकि थकि आनन सहेलिनको
 होइ रही खजन सी आखें बिन पाखें सीं ॥ १० ॥"

ऋतुवर्णनादर्शः—

"भरनिकी कहा चली तरनि भताप तप
 दरनिमें दुके सिंह गिरिनके चेटेसे
ऐसे समै राधिका गुविंद राजें कुंजनमें
 छूटत फुँहारे भ्रम असमान सेटे से।
खुसके सुनत राग रसके अतर लाग
 रसके कवित्त पढ़ें जगदीस जेटे से
अलिभुज भेटे जुही झाकरिलपेटे, होत
 पवन झपेटे देत ग्रीखम चपेटे से ॥ ११ ॥"

अमरुशतकानुवादात्कानिचित्पद्यानि समुद्ध्रियन्ते—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
 लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
 निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥

सवै०—प्यारी तुम्हें बिन कचुकी ही छबि आछी लगै कत अंग बधैबो
 यों कहि प्यारेनें नीवी गही तब आपसमें चितँई अब जैबो।




सो०–चत्वारो व्रजपाल,–तनयाः सुनयाः समभवन् ।
'मण्डन-छोटेलाल,-वासुदेव-गोविन्द' इति ॥ १९ ॥

व्रजपालमहोदयस्य सुचीलालेत्युपनामकस्य तनयाः। सुनयाः सुन्दरनीतिशालिनः ॥ १९ ॥

मण्डनमहोदयोऽथ तेषामयमाद्यो यस्य
वाणीकरवाद्योपमा सूक्तिरुपभासते
नवरसरत्नाकर-रावलचरित्र-जय–
साहयशःप्रख्यो यस्य ग्रन्थचयो रोचते ।
नानानरपालबहुमानास्पदमेष कृती
श्रीमज्जयसिंहप्रीतिदानायतनायते
देवर्ष्यंचटङ्कभट्टतैलङ्गानामङ्कगतः
सोयमकलङ्कशरदिन्दुरिव राजते ॥ २० ॥

तेषां तनयानां मध्ये मण्डनमहोदयः आद्यः प्रथमः। वाण्याः सरस्वत्याः करवाद्यं वीणा, तदुपमा। यस्य सूक्तिः अतिशयमधुरा महिता चेत्यर्थः। जयसाहयशः, (जयसाहसुजसप्रकाश) इति प्रख्यो मुख्यो यस्य। एतत्कृतानां ग्रन्थानां नाम, विवरणं चाग्रे दास्यते। बुन्दीश–बापूसिंह–भारतसिंह–रावकमहोदय–एतत्प्रभृतीनां नानानरपालानां बहुमानस्य भाजनम् । बहूनां राज्ञामाज्ञामधिगत्य अनेन ग्रन्था विरचिताः । जयपुरधरणीन्द्रः श्रीजगत्सिंहः, तत्सुतः श्रीजयसिंहदेवः, एतयोः यशःप्रख्यापनार्थ–प्रतापसुजस-

सचन्द्रिका, जयसाहसुजसप्रकाश एतदादीनां ग्रन्थानां निर्माणं त्वावश्यकमेव। यतो ह्रीमौ मण्डनमहोदयस्य प्रधानाश्रयावास्ताम्। परं 'कृष्णसुजसप्रकाश, जवानचरित्र, शिवनाथगुणसरिता, राठौरचरित्र, बापूचरित्र, सालिमविजयविनोद, मङ्गलप्रकाशं, भारतचरित्रप्रभृतयो ग्रन्था ग्रन्थानामादितः सूचितनामधेयानां भूमीशानां मनोविनोदाय रचिताः। एतेषां ग्रन्थानां विषयविवरणमग्रे प्रदास्यते। श्रीमज्जयसिंहदेवस्य (जगसिंहतनयस्य) प्रीतिदानस्य आयतनमिव आचरति, उपमानादाचारे क्यङ्। अङ्कगतः समीपमागतः। सोयं मण्डनमहोदयः, कलङ्करहितः शरच्चन्द्र इव राजते, बहुतरकीर्तिशालित्वात्॥ २०॥

सरससुरीतिसुनिबद्धसूक्तिसर्गपटून्
नित्यदा निसर्गजातमधुरमहोमयान्
आद्यकुलदैवताश्रयेण विश्रुताख्यान्नीति-
दक्षतोदयेन दशगुणितगुणोच्चयान्।
शेखावत-नाथावत-राठोडादिकीर्तिवहान्
बुन्दीमहाराजादितो मिलितमहोदयान्
वन्देदं महीन्द्रजयसिंहबहुमान्यकवीन्
सकलकवीन्द्रमौलिमण्डनमहोदयान्॥ २१॥

सूक्तिसर्गं सूक्तीनामुत्पादने पटून्। निसर्गजातं स्वाभाविकं यन्मधुरं महः (तेजः) तन्मयान्। तथा च महापुरुषतेजःशालित्वेपि तेषु स्वाभाविकं माधुर्यमासीदिति सूच्यते। आद्यं कुलदैवतं श्रीहयग्रीवः, सरस्वती च तयोराश्रयेण विश्रुतनामधेयान्। अत एव समये समये त इमे भगवती ध्यात्वा अभीष्टं साधयन्ति स्म। बहुषु स्थानेषु परिचयो दत्तः। यथा राघवचरित्रे-
"हृदयन [illegible]ीजगरंबको किय पूजन सुख पाय। भरज करी कर जोरिकैं उर आनंद्रो छाय ॥"। नीतिदक्षतायाः उदयेन, दशगुणितो गुणोच्चयो

गुणसमूहो येषां तान्। यथा ह्येतेषु वैदुष्यं कवित्वशक्तिश्चासीत् सा नीतिपाटवेन दशगुणिताऽभवदित्यर्थः। एते हि जयपुरराज्यस्य विश्वस्तजनसाधनीयेषु बहुषु राजरहस्येषु राजनैतिककार्येषु च प्रसिता अभूवन्, तदेतदग्रे सूचयिष्यते। बुन्दीमहाराजप्रभृतितो मिलितः महान् उदयः (उत्कर्षः) येभ्यस्तान्। बुन्दीनरेशेन, बापूसिंहक्षिन्दे अवधप्रान्तनरपतिना, अन्यैश्च भूपतिभिः प्रत्यक्षगजो रत्नमाल्यादि च भूयसी विभूतिर्दत्ता। श्रीमतो महीन्द्रस्य जयसिंहस्य बहुमान्यान् राजकवीन्। सकलकवीन्द्राणां मौलेर्मण्डनभूतान् मण्डनमहोदयान्, मण्डनपदस्य तन्त्रेण तथार्थः। कवीन्द्राणां मौलिभूतान्मण्डनमहोदयानिति चाऽर्थः। आदरार्थे बहुवचनमिति पूर्वमुक्तमेव ॥ २१ ॥

सो०—मुनिमुनिवसुहिमधाम,-मिते वत्सरे जयपतिः।
श्रीजयसिंहो ग्राम,-मदित मुकुन्दपुराभिधम् ॥ २२ ॥

हिमधामा चन्द्रः। १८७७ तमे विक्रमसंवत्सरे। जयपतिः जयपुरधरापतिः। श्रीमान् जयसिंहदेवो मुकुन्दपुराभिधं ग्रामम्, अदित अदात्। यो ह्यद्यावधि एतद्वंशजानामधिकारेऽस्ति ॥ २२ ॥

दो०—सूक्तिसुहितसामन्तगणसादरसमर्पितानि।
तुङ्गतुरङ्गमतङ्गजप्रभृतिधनान्युदितानि ॥ २३ ॥

सूक्तिभिः सुहितः प्रीतो यः सामन्तगणस्तेन सादरं समर्पितानि। तुङ्गा उन्नता ये तुरङ्गा मतङ्गजाश्च तत्प्रभृतीनि धनानि उदितानि जातानि। सामन्तदत्तानि बहूनि धनान्यागतानीति भावः। सामोदभूमीशश्रीरावलवैरीसालसिंहेन, रूदानाधिपति—माधवराजपुराधिकर्तृ-रावभरतसिंहेन, चौमूभूमीशनाथावतकृष्णसिंहेन, अन्यान्यैश्च जयपुरराज्यस्य अपरिसंख्यातैः सामन्तैर्मण्डनमहोदयाय स्वयशःप्रख्यातये भूयांसि धनानि दत्तानि। यदा हि टोंकराज्यनवाबेन मीरखांनामकेन राजपुत्रप्रदेशस्य स्थाने स्थाने लुण्टनमारणमाक्रमणं चारब्धं तदा हि मीरखानो माधवपुरसमीपे जयपुरराज्यस्य

भूयसीं भूमिमाचक्राम। लावाराज्योपरि अभियानमकरोत्। तत्पराभवाय श्रीजयपुरधरणीन्द्रेण जगत्सिंहदेवेन बहवः सामन्ताः प्रेषिता अभूवन्। तेषु लदानास्थानाधिपतेः रावमदनसिंहस्य पुत्रो भरतसिंहोपि प्रधानतया प्रहितोऽभूत्। स हि तं माधवपुरप्रान्तात्पराजित्य दूरं निर्वासयामास। सदैव च माधवराजपुरानामकं जयपुरराजभुक्तं पत्तनं स्वाधिकारे चक्रे। एतत्पूर्वमेतत्पत्तनं कमध्वजक्षत्रियाणामधिकारे आसीत्। ते च तस्मिन्समये निर्वीर्या अभूवन्निति मीरखानस्याधिकारे कस्मिन्नपि समये गच्छेदिदं पत्तनमिति शङ्कया सोयं भरतसिंहो माधवराजपुराभिधं राज्यमात्मनोधिकारे चक्रे। एतदसहमानाः कमध्वजक्षत्रियाः स्वकुलक्षयमविचारयन्तो मीरखानमेव शरणं ययुः। माधवराजपुराधिकारस्य लोभं दत्वा मीरखानं भारतसिंहस्य प्रातिद्वन्द्व्ये माधवराजपुरोपर्याक्रमणाय आनिन्यिरे। इतस्तु श्रीजगत्सिंहमहाराजस्य कृपापात्रमयं महावीरो भारतसिंहो माधवराजपुररक्षार्थं मीरखानेन सह सविक्रमं युयुधे। जयपुरेन्द्रस्याज्ञया बहवः सामन्ता भारतसिंहस्य सहायका भूत्वा मीरखानस्य प्रतिपक्षे जग्मुः। महापराक्रमो भारतसिंहो मीरखानं पराजित्य निर्वासयामास, तद्गर्वगञ्जनाय च तस्य स्त्रियो बन्दीकृत्य निजदुर्गे आनिनाय। एतं महाविजयं मण्डनमहाकविः 'भारतचरित्र' नामके काव्ये सुरुचिरं लिलेख। तस्मिन् युद्धे ये ये सामन्ता प्रामाधीशाश्च मीरखानप्रातिपक्ष्ये जग्मुस्तेषां सर्वेषां प्रायो नामानि भारतचरित्रे लिखितानि। यथा—

"बेटा भोपतसिंहको लेकें संग जुवान। लावासों चलि आयकें ठाडो भयो सुमान॥ भुज फरकत हरखत हियें नरू वंसके साथ। तुरक प्रानके लैनकों आय धस्यो हरनाथ॥ लियो कौनने आजलों जाके बलको अन्त। गांव झराणाको नरू धस्यो आय जसवन्त॥ जालि लिये जाने सबै जंग जीतिके दाव। चौरूंको जीवन खडो दे मूंछनपर ताव॥"

एवंविधानि परःशतानि सामन्तानां नामानि तत्रोपलभ्यन्ते। ततश्च ये ये सामन्ता युद्धे जग्मुस्ते सर्वे एव मण्डनकविं स्वनामनिवेशाय सूचयांचक्रुः। यतो हि राजाज्ञया ते सर्वे सामन्ताः प्रहिता अभूवन्। युद्धे च विजयोऽ-

भूदिति जयपुरेन्द्रस्य सविधे संमानप्राप्तये, इतिहासे यशःप्रख्यातये सर्व एव मण्डनकविकृतभारतचरित्रकाव्ये स्वनामनिवेशार्थं कविमिमं पूज याचकुः। अत एव सामन्तकृतो भूयान् संमानो मण्डनमहोदयस्यासीदि सर्वथा सुस्पष्टमेव। तदेतद्भारतचरित्रविवरणे पुनः स्पष्टं भवेत् ॥ २३ ॥

महिपतिमानितभट्टमणिमालामध्यगतो हि ।
मेरुरभून्मण्डनकविर्मतं यस्य मधुदोहि ॥ २४ ॥

महिपतिभिर्मानितानां भट्टमणीनां या माला, तस्या मध्यगतो मेरुरिव मण्डनकविरभूत्। यस्य मतं सूक्तमिति यावत्, मधुदोहि सुमधुरमासीत्। मालायां यदा मेरुरायाति तदा माला पूर्यते। एवं राजभिः संमानितेषु तैलङ्गभट्टमहोदयेषु मण्डनमहोदयश्चरमो बभूव। यद्यपि लक्ष्मणभट्टः पश्चादपि सुप्रतिष्ठितोऽभूत्तथापि मण्डनसदृशो महाकविः कतिवारं प्राप्तगजसंमानो राजकीयरहस्यभुक्तः प्रभावशाली च नाम्ना बभूवेति सूच्यते ॥ २४ ॥






हाकविर्मण्डनमहोदयः श्रीजगत्सिंहधरणीन्द्रस्य तत्तनयस्य श्रीसवाईजयसिंहदेवस्य च (द्वितीयस्य) समये कवितां चकार। एष हि श्रीश्रीजगत्सिंहभूपालस्यैव यशः प्रधानतया वर्णयति स्म। अनेन हि आत्मरचितेषु साहित्यग्रन्थेषु सर्वत्रोदाहरणस्थले श्रीजगत्सिंहनरेन्द्रस्य यश एव गीतम्। एतस्य कवेः समय एव श्रीमतो जयसिंहधरणीन्द्रस्य जन्माऽभवत्। श्रीमति जगत्सिंहदेवे लोकान्तरमुपयाते जयपुरराज्यस्य शासनसूत्रमतिविशृङ्खलमभूत्। तस्मिन्समयेऽन्तःपुराधिकृतो मोहननामा वर्षवर (नादर) एव सर्वेष्वपि राजकार्ये प्रधानमभवत्। अस्य हि विरोधिदलेन सह गुप्ताभिसन्धिरभूत्। एष हि नरवरस्यामात्य मानसिंह-

नामानं कुमारमानीय जयपुरराजसिंहासने स्थापयितुमुद्यमं चक्रे । स हि कुमारो राजहर्म्येषु निवासितोऽप्यभवत् । परं जगत्सिंहधरणीन्द्रस्य राठोडकुलजाता प्रधानमहिषी तमिमं प्रयासं परिज्ञाय व्यासफौजीरामस्य साहाय्येन चंदो-रूपालक्ष्योरन्तःपुराधिकृतयोः ( बढारण ) मन्त्रणया च रावलवैरीसालसिंहमग्रे कृत्वा तदिदं षड्यन्त्रं विफलयामास । श्रीजगत्सिंहधरणीन्द्रस्य भाटीकुलजाऽपरा महिषी सगर्भाऽसीत् । निभृतं निभृतं तद्रक्षायाः प्रबन्धं कृत्वा राठौडकुलजा महाराज्ञी, उपरितो मोहनचक्रेऽनुमतिमिव ददौ । समये श्रीमतो जयसिंहमहाराजस्य जन्माभवत् । सर्वं विरोधिदलं रावलवैरीसालस्य दृढतया नीतिकौशलेन च परास्तमभवत् । तदेतत्सर्वं काण्डं मण्डनकवेः समक्षेऽभवत् । आसीदयं तस्मिन्किञ्चित्संमिलितोऽपि । एष हि रावलवैरीसालसिंहस्य मन्त्रणादाताऽतिकृपाभाजनमासीत् । एष हि तदाज्ञया तदभिप्रायानुसारमेव सर्वमेतच्चरित्रं निजरचितेषु राठोडचरित्र-रावलचरित्र-जयसाहसुजसप्रकाशनामकेषु व्रजभाषाग्रन्थेषु प्रकाशयामास ।

मण्डनकविर्यथा प्रसिद्धः कविरासीदेवं राजनीतिकार्येष्वपि सोऽयं महानिपुणोऽभवत् । राजकीयाधिकारिष्वस्य सुमहान् संमानोऽभूत् । जयपुरराज्यस्य तस्मिन्समये प्रधानकर्णधारभूतो रावलश्रीवैरीसालसिंहोऽस्य कवेर्महान् गुणग्राही सुबहुशश्च संमानयिताभवत् । मण्डनकवीन्द्रेणाप्येतस्य महोदयस्य प्रशंसायां रावलचरित्रनामा ग्रन्थो निर्मितः । एतदतिरिक्तं राठोरचरित्र-जयसाहसुजसप्रकाशादिग्रन्थेष्वपि रावलमहोदयस्य शतमुखं प्रशंसा कृता ।

तत्सामयिका मन्त्रिप्रवरव्यासफौजीराम-दीवानशिवनारायणप्रभृतयो ये राजकीया अधिकारिण आसंस्तैः साकमस्य भूयसी घनिष्ठताभूत् । स्थाने स्थाने तेषां प्रशंसोपलभ्यते । मण्डनमहोदयो निजजीवने राजकीयरहस्यकार्येष्वेव संमिलितोऽभवत् । पश्चात् टौंकनवाबेतिप्रासिद्धिपदेन मीरखानेन यदा हि जयपुरराज्ये उत्पात आरब्धोऽभूत्तस्मिन्समये रावलवैरीसालसिंहः श्रीजगत्सिंहनरेन्द्रादाज्ञां प्राप्य ब्रिटिशाभिकृतेन जनरलमेटकाफमहोदयेन सह एतत्संबन्धे मन्त्रणां कर्तुं दिल्लीमगमत् । श्रीमान्मण्डनकविरप्येवेव सहैव प्रहितोऽभवत् । तेन स्वचक्षुषा यथेक्षितं सदेव रावलचरित्रे सर्वं

तत्सम्बन्धि वृत्तं वर्णितम् । तेन हि राजनीतिकौशलस्य भूयांसि वृत्तानि तस्मिन्प्रदर्शितानि । सर्वाणि च तानि यथार्थानि स्वचक्षु प्रेक्षितान्यासन् । उक्तं हि तत्र मण्डनमहोदयेन—

"ये चरित्र आँखिनसों देखे, तब हियमें सुख छायो ।
श्रीप्रतापसुत जगतसिंहको यह प्रताप जस गायो ॥"

एवमेव श्रीजयसिंहदेवस्य जन्मावसरेपि मोहननादरकृत महत् षड्यन्त्र प्रावर्तत । मण्डनकविरस्य समयेपि सचक्सिन् रहस्येन्तर्भूत आसीत् । राजमहिष्या राठोडवंशजातया, रूपा–चन्द्रोनाम्न्योरस्त पुत्रप्रबन्धकर्योमुखेन यद्यद् वाचिकं प्रदाय राजप्रबन्धकर्तृणा रावलवैरीसालसिंहादीना सविधे विश्वस्तजनसम्प्रधार्य राजरहस्य प्रकाशित तत्सर्वमस्य कवे समक्षमिवाभवत् । एतद्धि राठोरचरित्रे स्पष्टीकृतं कविना । इद कारणमेवावलम्ब्य, तस्मिन् षड्यन्त्रे ये ये रावलवैरीसालस्य विरोधिन आसस्ते सर्वेपि मण्डनकवये क्रुध्यन्ति स्म । अवकाश प्राप्य इम तिरस्कर्तुमिमे अन्विष्यन्ति स्म । श्रूयते सोय मण्डनकवि कस्मिन्नपि राजनीतिचक्रे पातितो विरोधिना दर्पजनकोऽभवत् । श्रूयते चाय लावाग्रामस्थिते दुर्गे दृष्टिनिरुद्धित (नजरकैद) इवो भूत् । पर यदा मण्डनकविपक्षीयस्य राजचक्रस्य बल प्रसृतम्, वास्तवरहस्य च प्रकाशितमभूत्तदाय ससत्कारमुन्मोच्य हस्तिस्कन्धस्थित सबहुमान गृह प्रेषितो राज्ञेति ।

एतस्य साक्षात्प्रमाण तूपलभ्यमानेष्वस्य कवेर्ग्रन्थेषु नोपलब्ध पर 'कृष्णव्रजविहार'नामको ग्रन्थ कविना लावादुर्गे एव राजहर्म्ये स्थितेव लिखित इति प्राप्यते । तद्ग्रन्थस्यान्ते लिखित तेन—

"श्रीजयसिंहनरिंदको लावागढ बलमार ।
कारागृहमें ग्रन्थने लिय मगळ अवतार ॥"

मण्डनकवीन्द्रो बहुषु राजस्थानेषु समानित आसीत् । जयपुरराज्य त्वस्य प्रधानमाश्रयोऽभूत् । अत्र ह्यस्य वंशपरम्परात प्रसिद्धि प्रतिष्ठा चासीत् । जयसिंहधरणीपुरन्दरेण सतुष्यास्मै मुकुन्दपुराभिधो ग्राम पुण्यार्थम् (उदक) समर्पितोऽभूत् । रावलवैरीसालसिंहादयो राजकीयाधिकारिणोस्या·

तिथनिष्ठाः कृपाकारिण आसन् । जयपुरराज्यस्य सर्वेऽपि सामन्ताः, कवेरस्य तस्मिन्समये राजसविधे सुबहुलां प्रवृत्तिमालोक्य एनं पूजयित्वाऽनुकूलयन्ति स्म । यथा हि मीरखानयुद्धे सर्वेऽपि सामन्ताः कविमिमं संतोषयांचक्रुः। ऐतस्य वृत्तं बहुशः पूर्वं लिखितमग्रे च किञ्चिल्लेखिष्यते । एतदतिरिक्तमन्ये बुन्दीदेशप्रभृतीनां राजानः कविमिमं ससंमानमाह्वयन्ति स्म । बुन्दीनरेशार्थं कविनानेन बहुशो ग्रन्था विरचिताः । बुन्दीपतिस्तस्मिन्समये श्रीमान् रामसिंहभूपो बभूव । तदर्थं 'रामजसचन्द्रिका'नामको ग्रन्थो व्यलेखि । 'रससमुद्रो'पि बुन्दीनरेशार्थमेव विरचितोऽभवत् । एष राजापि ग्रामादिभूलक्षपदं भूयसीमस्मै समर्पयामास ।

अथ धमान्ते तस्मिन्समये बापूसिंहछिन्दे नामको राजासीत् । एष हि महाप्रतापी आसीत् । दलेलखानेन सह मीरांपुरस्य प्राङ्गणेऽस्य महद् युद्धमभूत् । विजयी सोयमात्मनः प्रतापं सुबहु प्रासारयत् । भारतेऽधिकारं प्राप्तैर्गौराङ्गैः साकमप्यस्य किञ्चित्प्रतीपताभूत् । अयमपि राजा कविराजमिमं सबहुमानमानाय्य बहुतरं सत्करोति स्म । मण्डनमहोदयेनापि नरेन्द्रस्यास्य यशोवर्णनापरं 'बापूचरित्र' नामकमत्युत्तमं काव्यं व्यरचि । एतस्य कवेर्वाणाः कियानप्यादर्शोऽग्रे मद्रास्ते । एवमयं कविर्बहुषु राजेषु प्रख्यातः प्राप्तसंमानश्चासीत् । बहवोऽस्य ग्रन्थाः स्वयं मया नावलोकितास्तेष्वपि भूयांसो ग्रन्था भूपतीनां प्रशंसायामेव लिखिताः सन्ति । यथा-सालिमविजयविनोद-जवाहरचरित्र-शिवनाथगुणलहरी-आदयः । नाम्ना स्पष्टं प्रतीयते, यदेते भूपतिविशेषस्य यशोवर्णन एव लिखिताः सन्तीति । ये ग्रन्था मया स्वयमवलोकितास्तेषां नामानि विवरणं च किञ्चिदग्रे वास्ते । परमस्मिन्सन्देहः किञ्चिदपि नायातिष्ठते-यन्मण्डनकविवरः स्वजीवने बहुषु राजस्थानेषु राजभिः परमं संमानं प्रापितः । कतिवारं च साक्षात्मतत्सम्रव्दकन्धमभिरस्य गृहमायातः । यथा हि प्रसिद्धं कुले ।

कविरयं यथा राजसु प्रसक्त आसीदेवं राजतंत्रस्येतिहासे वंशपरम्परावर्णने चापि सुमीढ आसीत् । यस्य यशोवर्णनमनेन कृतं तस्यैव हि पूर्वं वंशावर्णनमारब्धम् । राज्ञामतिरिक्तं ये ये राजपूजिताः सन्तो महान्तश्च

(सन्त, महन्त) आसन् तेषामपि वंशपरिज्ञानमस्याभवत् । अनेन हि 'मल्लप्रकाश' ग्रन्थे गालवाश्रमाचार्याणां वंशपरम्परा वर्णिता ।

अस्य हस्तेन बहूनां राज्ञां राजकीयपुरुषाणां च प्रशंसात्मकानि काव्यानि लिखितानि । तस्मिन्समये कविमिमं महाराजप्रियं महानिपुणं चावलोक्य सर्वे-ऽप्यात्मनो यशःप्रसृतये कविनानेन सह सद्भावमास्थापयन् । सुबहुपूजितः सोऽयमपि तेषां यशोगीतीर्जगौ । सन्तुष्टः कविः किमतोऽधिकं कुर्यात् । अत एव बहवो ग्रन्था अस्य प्रशंसापराः सन्ति । स्वल्पे चावसरे प्राप्ते प्रायः संवादीनि पद्यान्यपि परस्पर ग्रन्थेषु समावेशितान्यभूवन् । परमस्य कविता मर्मस्पर्शिनी सुमधुरा चासीदत्र नासीत्संशयः । जयपुरीयैः साकं सुबहुमिलि-ततयाऽस्य ब्रजभाषायां कुत्रचित् कुत्रचित् राजपुत्रप्रान्तीयशब्दा अपि-ह्युपलभ्यन्ते । यथा 'पठाए' स्थाने 'पिठाये' इति कुत्रचिद्दृश्यते ।

अद्यावधि विदिता अस्य इमे ग्रन्थाः सन्ति—प्रतापसुजसचन्द्रिका, जयसाहसुजसप्रकाश, राठोडचरित्र, रामजसचन्द्रिका, रावळचरित्र, भार-तचरित्र, बापूचरित्र, रसरत्नावली, रससमुद्र, कृष्णसुजसप्रकाश, नवरस-रत्नाकर, श्रीकृष्णव्रजविहार, जवानचरित्र, षड्ऋतुवर्णन, भगवद्गीतावि-लास, सुलोचनाचरित्र, शिवनाथगुणरसिका, रामनीति, रामचरित्र, नाडि-कविजयविनोद, बालकाण्डरामायण, हनुमानपचीसी, मल्लप्रकाश, बड-आचार्यजीकी पूर्ण्यापरिक्रमा, फुटकरकवित्त, इत्यादयः । एतेषु ये ये ग्रन्था मयाऽवलोकितास्तेषां विवरणमधस्ताद्दीयते—

## भारतचरित्रम्

टोंकराज्यस्य नवाबो मीरखानो 'छाजा' राज्योपर्याक्रमणमकरोत् । स हि जयपुरराज्यमुक्तां माधवपुरप्रान्तवर्तिनीं बहुतरां भूमिमन्यायतोऽधिकारे चक्रे । तदा हि जयपुरेन्द्रस्य श्रीजगत्सिंहमहाराजस्याज्ञया ककोडाग्रामाधि-पते रावमदनसिंहस्य पुत्रो भारतसिंहो छाजाराज्यस्य सहायतार्थं मिर्जामन्-न्दादायाऽभियानमकरोत् । एष बली मीरखानं पराजित्य माधवपुरप्रान्ता-न्निःसारयामास । अस्यैव भारतसिंहस्यास्मिन् काव्ये यशोवर्णनम् ।

पूर्वं माधवराजपुराभिधं पत्तनं कमध्वजक्षत्रियाणामधिकारे आसीद्येषां परिवृदस्तस्मिन् समये मानसिंहाख्योऽभूत्। तत्रत्यराजपुत्राणामकर्मण्यतां निरीक्ष्य मीरखांनवाबस्याधिकारो भवेदिति शङ्कया श्रीजगत्सिंहमहाराजस्यानुमतिमुपलभ्य भारतसिंहस्तत्राधिकारमकरोत् । मानसिंहो राजन्यगौरवं विस्मृत्य त्वमेव मे सर्वस्वमित्युपस्तुवन् मीरखानस्य शरणं ययाचे। मण्डनमहोदयैरेवं लिखितम्—

"मौज मही मनसूवे सबै तुम सील संतोष हमैं भरि बाथ हो।
मा भगिनी बहू बेटिनमें तुम जोरसों राजस कीये सनाथ हो।
मीरखां! पाछें अगें तुम दीखत, मान महिन्द्र कहै सुख साथ हो।
नाथ जलन्धर बोलैं नहीं, तुम बोलते मेरे जलन्धरनाथ हो॥" इत्यादि-

नानाविधप्रलोभने पतितो मीरखानो भारतसिंहविजयस्य प्रणमकरोत्। स हि स्वबलविभीषिकाप्रदर्शकमेकं पत्रं माधवराजपुरापरावर्तनाय भारतसिंहाय प्राहिणोत्। अयमपि तदुत्तरे युद्धाय तमाजुहाव। तत्र घोरयुद्धे मीरखानं विजित्य सदर्पदलनाय तस्य स्त्रियो बन्दीकृत्य निजदुर्गं आनिनाय। यथा—

"मदनके बेटे तैंने मार पठेनेटे सबै
मेरी ता समैंमें भई देह जिन जुरमें
मुख महताब औ गुलाबसम आब दिपै
नैन धोय सुरमें बहो है नीर उरमें।
हीरा पुखराज लाल मोतिनसों ढांई रहैं।
मंडन अनेकविध खाती खान सुरमें
बात यह बांकी चहूं चकनमें छाय गई
रयायके किलामें धरी मीरखांकी हुरमें॥"

ततोऽतिक्रुद्धः सर्वबलपरिवारं नीत्वा मीरखानो माधवराजपुरमाचक्राम। भारतोऽपि राजपुत्रसम्पात्यादाय सविक्रममनेन सह घोरं युयुधे। एतद्धि सुमहद् युद्धमासीत् । श्रीजगत्सिंहस्याज्ञातो जयपुरराज्याधीना बहवः सामन्ता अस्मिन्युद्धे भारतसिंहसहायतायै समभिजग्मुः। तस्मिन्समये प्रसिद्धानां पौरक्षत्रियाणां बहूनां च मण्डनकविनैव नामानि दृश्यन्ते। एवं

यानि यानि सामन्तराज्यानि तस्मिन्युद्धे योगं ददुस्तेषु केषाचन भारतचरित्राश्रामानि संगृह्यादर्शरूपेणाधस्ताद्दीयन्ते—लावा, अजमेरी, पचाला, टीकलगाव, सिरोही, खिजूरखा, कूतल, हथेली, घादावास, मादी, संकरपुर, मडोर, लाखावास, परवण, मदनपुरा, चकवाडा, बासडी, चावख्या, झाक, वास, राताखेडा, गोऊदी, झराणा, चादमा, चोरू, झाडला, सेदरा, आनडोत, खेडा, कागा, रारा, पिणाची, पियलाज, अँखरोटा, डामच, कादेडा, लदाना, सिराणो, प्रभृतीनि।

नैतद्युद्धं सामान्यमासीत्। अष्टमासपर्यन्तं महावीरो भारतसिंहः सोत्साहं युयुधे। यथा सूक्तम्—

सोरठा—"आठ महीना जग, किय इँहि बिधि आरथबली।
बिनचोटिमकी सैन, सबै तेग लै दलमली॥"

अस्मिन्काव्ये युद्धविषये ओजोव्यञ्जिका साधीयसी नियद्धा मण्डनकवीन्द्रेण कविता। अतिपलायने प्रोक्तेषु पद्येषु कानिचिद्दीयन्ते—

"कोइनने जिनके लखे न नरा नैनसौं
तिनकौं मिलै न अब पैन्हनकौं तनियाँ
सोती सुखसेजनपे सदा अब भूखी भई
फिरत हैं देखतीं दुकाननमें बनियाँ।
मडन महीन्द्र राव मदनके भारथमें
कीर्नाहैं कितेकनकौं दूर दुरकनियाँ
दु खनसौं छाय घर जाय जाय दुनियाके
पनिया भरन लागीं सबै तुरकनियाँ॥ १॥
भारत तिहारी तदिवासी तरवार चलैं
मीरखा नवावजूकी सेना भई वे गर्म
यह सुनि छारि चली धाम तजि धामनकौं
पायनमें छाले परे भाजनके वेग में।
अगनमें कामकी कल्यासीं, मुख चन्द्रमासे,
कबू न हि चूकें रतिकेलिनिके नेगमें

गिरिनमें कंदरामें नळनमें नाळनमें
तोसौं डरि डोलत नवाबनकी बेगमैं ॥ २ ॥
तेजभरी तीखी तरवारनके ताव लखि
दाव करि केते सबै सेनासौं दल्यो गयो
सुनिकैं उमाद भरे वाह वाह ललकारे
हारे हारे वचन उचारत हल्यो गयो ।
मंदन न जान्यो रघुवंसिनको भारी बल
हारिकैं हथ्यारनकों हियमें तल्यो गयो
मदनके भारत प्रताप सब देकैं सोकों
मुखकों मलीन करि मीरखां चल्यो गयो ॥ ३ ॥"

अस्य ग्रन्थस्य रचनाकालः १८७४ तमो विक्रमसंवत्सरः ।

## रावलचरित्रम्

मीरखानेन पुनर्जयपुरराज्ये उत्पात आरब्धः । बहुषु दुर्गेषु ग्रामेषु च सेनाधिकारो विहितः । जयपुरेन्द्रः श्रीजगत्सिंहमहाराजस्तस्मिन् समये योधपुरमयासीत् । स हि वृत्तमेतदाकर्ण्य जयपुरमागतो मीरखांनिर्वासनाय सर्वेषां सामन्तानां महतीं सभामकरोत् । तत्र रावलवैरीसालसिंहं देहलीं गत्वा जनरलमेटकाफनाम्ना ब्रिटिशाधिकृतेन सह साहाय्यं गृहीत्वाऽस्य निर्वासनाय प्राहिणोत् । देहल्यां जयसिंहपुरे सदलबलस्य रावलमहोदयस्योपनिवेशोऽभवत् । तत्र राजपुत्रप्रदेशस्य निरीक्षणार्थं नियतेन मेटकाफनाम्ना सर्वं संमन्त्र्य, नानाविधराजनीतिमर्माणि विविच्य तत्साहाय्यं प्राप्य पुनर्जयपुरमुपागतो रावलमहोदयो मीरखानं जयपुरप्रान्तादेव निरवीवसत् । ततः परावृत्य हयरोहीग्रामे कृतोपनिवेशे रावले, मण्डनमहोदयो महाराजजगत्सिंहदेवस्य सविधे प्रतिदिनं वर्धमानं मोहननाजिरस्याधिकारं लोकानामहिताचरणं चासूचयत्—

दो०—"पीऐसौं नादर भयो गहि हरामकी गैल ।
जगतसिंहमहाराजसौं बाढी दिन दिन रैल ॥

नादर मरद ह्वैके देत दुख सिंहन कौं
तोहीसों टरैगो तेरैं बुद्धि बलवान को
पावत न तोकों ते भजैंगे भयभीत ह्वैके
जोर लखि तेरी तड़िता सी किरवान को ।
कच्छकुलतिलक जगतसिंहजूके घरैं
तेरो ही चढ़ायो रंग चढि हैं निसान को
ढाल रघुवंसकी बिसाल नृप बैरीसाल
रामने दियो है तोकों काम हिन्दुवान को ॥"

आसीच्चास्मिन्समये महान् प्रतापो वर्षवरस्य । न कोऽपि तदभिमुखं स्थातुमप्यपारयत् । मण्डनेनोक्तम्—

"सकल राव, राजा सकल, सकल हिन्दुकुलसूर ।
नादरकौं देखैं सके, तजे मुखनके नूर ॥
डारि दई सगरेनने कर कर सौं करवाल ।
नादरकौं जिय जानि लिय काल व्याल विकराल ॥"

सोप्यनेन नीतिकुशलेन राज्याद्विवासितः । इदं नीतिचक्रमस्मिन्ग्रन्थे विस्तरतो वर्णितम् । अन्ते प्रोक्तम्—

"वचनको संगी जंग आलिम फिरंगी रंगी
बड़ो मटकला बनाय लियो चेरो है
ताजरसों मिलिकें विचार लियो राज लैबो
ऐसो जनरैल ताहि बातन सौं घेरो है ।
जगमें प्रसंस रघुवंसमें उजेरो कियो
विमुख महिन्द्रनके हिये डर डेरो है
सांचो परतच्छ लच्छ लच्छ कछवाहन में
बैरीसाल रावल प्रताप आज तेरो है ॥"

यस्मिन् समये महाराजः श्रीजयसिंहदेवो बाल्यावस्थायामासीत्तदार्थं बैरीसालसिंह एव राज्यपरिपालनमकरोत् । एतस्य दिनचर्या, प्रतापश्च

मण्डनमहोदयेन सुरम्यं वर्णितः। परं सा विस्तृतेति राजसभासंनिवेशादिकः कियानंशो दर्श्यते—

पद्धरी—"नाथावत वैरीसाल छत्र। सब राजसभा सँग कै पवित्र॥
जब आइ गेहसों करत काम। भरजात तुरत दीवान आम॥
हाजर जहँ दीसत सब दरोग। बकसी आवत निज लियें लोग॥
नायब समेत बल फौजदार। दीसत हाजर गढमुलकवार॥
सगरी पलटनके कुमेदान। पावत नित सब सनमान मान॥
सब देसनके आवत वकील। बैठत निज बैठक बिना ढील॥
सब देसनकी कै खबर चीस। हाजर सगरे कुफिया नवीस॥
छत्तीस कारखाने उदार। सब खबर सुनावत औधदार॥
जो करत अरज जिहिंरीति जोइ। लखि राजनीति कहै देत सोइ॥
अकबार सुनावत खबरदार। सब हिन्दुहदको राजसार॥
पतसाह घरनकी कहत बात। अँगरेज सदरकी विधि ख्यात॥
छत्तीस कारखाने बहाल। नित दिन बढियेकी रचत चाल॥
गढ गाँव सहर के सुनत न्याय। कहि देत रीति व्यवहार पाय॥
सुभ सुनत परगनेके हवाल। कुफिया घर, रायक हिन्दुपाल॥
सुनि लेत राजको सब हिसाब। बिन ताव, सोच पूछत जुवाब॥
बकसत सेवा लखि सिरोपाव। मूछन पै साचे, वरलताव॥" इत्यादि

एतस्य रचनाकालः १८७६ तमो विक्रमसंवत्सरः।

## राठोडचरित्रम्

जयपुरपुरन्दरस्य श्रीजगत्सिंहधार्त्तराष्ट्रस्य राठोडकुलजाता पट्टमहिषी, बाल्यएके कथं राज्यरक्षायां समिलिताऽभवत्, भाटीकुलजाया राजमहिष्या गर्भतो लोकान्तरमुपयाते जयपुरेन्द्रे कथमिव श्रीजयसिंहदेवस्य जन्माऽभवत्, वैरिसालप्रभृतिभिः कथं विरोधिपक्षमुन्मूल्य श्रीजयसिंहदेवस्य राज्यभोगाय प्रेरिता परितः, इत्यादि सर्वं वृत्तं मुकलितसुमसदृशया रीत्या वर्णितम्। रायकपरिशाङ्गिणोस्य भूपः सवादी। अस्य रचनाकालः १८७६ विक्रमसंवत्सरः।

